श्रीगणेशायनमः॥ अथ चूडाकर्म॥ तच्चु संवत्सराभ्यंतरे तृतीयसंवत्सराभ्यंतरे वा यथा कुलाचारमादित्यादि शुद्धौ उदगयन आपूर्यमाणपक्षे शुक्रास्तादिदोषरहित रिक्तादिदोषरहित सोम गुरु बुध शुक्रान्यतमवाराविहित नक्षत्रसमन्वितायां तिथौ कृतनित्यक्रियो यजमानो अस्य कुमारस्य श्वः अद्य वा चूडाकरणङ्कर्तुं तदङ्गम्पुण्याहवाचनमाविघ्नपूजनं मण्डपदेवतापूजनम्मातृकापूजनं वसोर्धारापूजनमायुष्यमंत्रजपन्नान्दीश्राद्धाञ्चाहङ्करिष्ये । तत्रादौ निर्विघ्नतासिध्यर्थं गणेशांबिकयोः पूजनमहंकरिष्ये । तानि कृत्वा अनुच्छिष्टपाकेन त्रीन् ब्राह्मणान् चूडाकरणपूर्वांगतया विहितत्वेनाहं भोजयिष्ये, इति संस्कारपद्धतिषु विशेषः । एवं मातृपूजाभ्युदयिकादि कृत्वा मण्डपे परिष्कृतभूमौ कुशकंडिकामारभेत्। तत्रक्रमः, कुशैर्हस्तामितां भूमिं परिसमुह्य तानैशान्यां परित्यज्य गोमयोदकेनोपालिप्य स्रुवमुखेन प्रादेशमात्रं त्रिरुल्लिख्य उल्लेखनक-

प्रणीतोदकं त्रिःप्रोक्षणीपात्रे निधाय द्वाभ्यामनामिकांगुष्ठाभ्यामुत्तराग्रंपवित्रंगृहीत्वा-
त्रिरुत्पवनं ततः प्रोक्षणीपात्रं वामहस्तेकृत्वानामिकांगुष्ठगृहीतपवित्राभ्यां प्रोक्षणीजलं-
त्रिरुत्क्षिप्य प्रणीतोदकेन प्रोक्षणीपात्रमभ्युक्ष्य, प्रोक्षणीजलेनासादितवस्तून्यभिषि-
च्याग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात्, आज्यस्थाल्यामाज्यंकृत्वाऽधिश्रित्य
ज्वलत्तृणादिकमादायाज्यस्योपरिप्रदक्षिणंभ्रामयित्वा वन्हौ तत्क्षिपेत्, ततस्त्रिःस्रुवः
प्रतपनं सम्मार्जनकुशानामग्रैरंतरतोमूलैर्बाह्यतः स्रुवंसम्मृज्य प्रणीतोदकेनाभ्युक्ष्य
पूर्ववत्त्रिःप्रतप्य दक्षिणतोनिदध्यात् तत अग्निःप्रदक्षिणक्रमेणाज्यमवतार्याग्रतोनि-
दध्यात् ततःप्रोक्षणीवत् त्रिःराज्योत्पवनमेवच्च सत्यपद्रव्येतन्निरसनं पूर्ववत्प्रोक्ष-
ण्युत्पवन तंतउत्थाय उपयमनकुशानादाय वामहस्तेकृत्वा प्रजापतिंमनसाध्यात्वा-
तूष्णीमग्नौ घृताक्ताःसमिधस्तिस्रः प्रक्षिपेत् तत उपविश्यसपवित्रप्रोक्षण्युदकेन

प्रदक्षिणक्रमेणाग्निपर्युक्ष्य प्रणीतापात्रेपवित्रे कृत्वा ब्रह्मणान्वारब्धः पातितदक्षिणजानुः समिद्धतमेग्नौ जुहुयात् तत्प्रत्याहुत्यनंतरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः ओं प्रजापतये स्वाहा इदं प्रजापतये नममेतिसर्वत्र ॥१॥ इतिमनसा ओं इन्द्राय-स्वाहा इदमिन्द्राय ॥२॥ इत्याघारौ, ओं अग्नये स्वाहा इदमग्नये ॥३॥ ओंसोमाय स्वाहा इदंसोमाय॥४॥ इत्याज्यभागौ, ओं भूः स्वाहा इदमग्नये॥५॥ओं भुवःस्वाहा इदं वायवे॥६॥ओंस्वः स्वाहा इदंसूर्य्याय॥७॥एता महाव्याहृतयः॥ओं त्वन्नो अग्नेवरुणस्य विद्वान्देवस्य हेडो ऽअवयासिसीष्ठाः। यजिष्ठो वन्हितमः शोशुचानोविश्वाद्वेषा ँ सि प्रमुमुग्ध्यस्मत्स्वाहा इदमग्निवरुणाभ्यां ॥८॥ ओं सत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽ अस्याउषसोव्युष्टौ । अवयक्ष्वनोवरुण ँ रराणोवीहि मृडीकं सुहवोनऽएधि स्वाहा इदमग्निवरुणाभ्यां ॥ ९ ॥ ओंअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यामित्त्वमयाऽअसि ।

अयानो यज्ञंवहास्ययानोधेहिभेषज ठं स्वाहा इदमग्नये ॥१०॥ ओं येतेशतंवरुण, य सहस्रं यज्ञिया पाशाविततामहान्तः। तेभिर्नोअद्यसवितोतविष्णुर्विश्वेमुञ्चन्तुमरुतः स्वर्काः स्वाहा। इदंवरुणायसवित्रेविष्णवे विश्वेभ्योदेवेभ्योमरुद्भ्यः स्वर्केभ्यः॥११॥ ओं उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमठंश्रथाय । अथावयमादित्यव्रतेतवानागसः- अदितये स्याम स्वाहा। इदंवरुणाय ॥१२॥ इति सर्वप्रायश्चित्तं। ओं प्रजापतयेस्वाहा ॥१३॥ इतिमनसा इतिप्राजापत्यं । ओं अग्नयेस्विष्टकृतेस्वाहा इदमग्नये स्विष्टकृते ॥१४॥ इतिस्विष्टकृद्धोमः । अथसंस्रवप्राशनं । तत आचम्य ओं अद्यामुष्यकुमा- रस्यकृतैतच्चूडाकरणहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदंपूर्णपात्रं प्रजापतिदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणायब्रह्मणोदक्षिणां तुभ्यमहं संप्रददे इति ब्रह्मणे दक्षिणां दद्यात् । ओंस्वस्तीतिप्रतिवचनं। ततो ब्रह्मग्रंथिविमोकः । तत ओं सुमि-

त्रियानऽआपऽओषधयः संतु इतिपवित्राभ्यां प्रणीताजलमानीय तेनशिरस्सम्मृज्य ओं दुर्म्मित्रियास्तस्मै सन्तु योस्मान्द्वेष्टियञ्चवयंन्द्विष्मः इत्यैशान्यां प्रणीतान्युब्जीकरणं। ततस्तरणक्रमेण बर्हिरुत्थाप्याज्येनाभिघार्यं ओं देवगातुविदोगातुं वित्त्वागातुमितमनसस्पत इमन्देवयज्ञꣳ स्वाहा वाते धाः स्वाहा इतिमंत्रेण बर्हिर्होमः। अथउष्णोदकमादाय ओं उष्णेनवायुउदकेनेह्यदितेकेशान्वप इतिमंत्रेण शीतास्वप्सुष्णमापआसिंचति तत्र मिश्रितोदकेन उपकल्पित नवनीत घन्यतमापिण्डं तूष्णीं प्रक्षिप्य दक्षिण पश्चिमोत्तर क्रमेण पूर्वादिशाबद्धकुमारकजूटिकात्रये दक्षिणजूटिकां ओंसवित्रा मसूता दैव्या आपउदंतु ते तनू दीर्घायुत्वायवर्च्चसे इति मंत्रं पठित्वा तेनवामिश्रितवारिणा प्रक्षाल्य ततोदक्षिणभागस्थितं जुटिका भागत्रयं कुर्यात् तत्र एकां एकां जूटिकां प्रतिकुशपत्रत्रय संयोजनं कुर्यात शल्लकीकंटकेन तूष्णीं विवरणं कृत्वा भागत्रयं कुर्यात

ततः सप्तविंशति कुशपत्रतःपत्रत्रयमानीय केशमूल संलग्नाग्रजूटिका प्रथमभागमध्यां
तरितंकुर्यात् ओं ओषधे त्रायस्वस्वधितेमैनठंः हिंठं, सीः इति मन्त्रेण ततो लोहक्षुरं
गृहीत्वा ॐ शिवोनामासि स्वधितिस्ते पितानमस्ते अस्तुमामाहिंठं,सीः इत्यादाय
ओं निवर्तयाम्यायुषेन्नाद्यायप्रजननायरायस्पोषायसुप्रजास्त्वायसुवीर्याय इति मंत्रेण
जूटिका संलग्नं कुर्यात ततः कुशपत्रत्रयसहितां जूटिकां छिनत्ति ओं येनावपत्सविता
क्षुरेण सोमस्यराज्ञोवरुणस्यविद्वान्। तेन ते ब्रह्मणो वपतेदमस्यायुष्यं जरदष्टिर्यथासत
इति मंत्रेण दक्षिणजूटिका छेदनं कुर्यात् ततस्तान् लूनकुशत्रयसहितान् अनडुहगो
मयपिंडोपरि उत्तरस्यां निदध्यात, अत्रैव पूर्वप्रक्षालितमपरभागद्वय कुशपत्रत्रितयांत-
र्निधानादिछेदनवर्ज्जंसर्वंपूर्ववच्छेदनं तूष्णीं ततः पश्चिमजूटिकायां पूर्ववत्तेनैवमंत्रेण
प्रक्षालनं तूष्णीं शल्लकीकंटकेन भागत्रयकरणं केशमूलसंलग्नंकेशांतरित मध्यकुशप-

त्र्यधारण तु ग्रहण तत योजनानितत्तन्मन्त्रेणैव तत्र प्रथमजूटिकाछेदने मन्त्रः ओं।
त्र्यायुषंयमदग्नेः कश्यपस्यत्र्यायुषं यद्देवेषुत्र्यायुषं तन्नोऽअस्तुत्र्यायुषं इतिमंत्रेण छित्वा
ततः पुर्ववद्गोमयपिण्डोपरि निदध्यात तत्रावशिष्टभागद्वयं कुशपत्रत्रयं केशांतर्निधा
नादिछेदनवर्जं सर्वं पुर्ववदेव छेदनं तूष्णीमेवलूनकुशपत्रत्रयंकेशानां गोमयपिण्डोपरि-
धारणंच। तत उत्तरभागजूटिकायां प्रक्षालनादिक्षुरसंयोजनांतेषु पूर्ववत्तत्तन्मंत्रप्रयोगः।
प्रथमभागजूटिकायां छेदनमंत्रः ओं येनभूरिश्चरादिव ज्योक्पश्चाद्धिसूर्यं तेनते
वपामिब्रह्मणाजीवातवे जीवनाय सुश्लोक्याय स्वस्तये। ततः केशान्गोमयपिण्डोपरि
निदध्यात् ततोऽवशिष्टभागद्वये कुशपत्रत्रयं केशांतर्निधानादि छेदनवर्जंसर्वपूर्ववदेव
छेदनं तूष्णीं गोमयपिण्डोपरि धारणमपि। ततः समस्तशिरः प्रक्षलय त्रिःकेशोपरिक्षुरं-
प्रदक्षिणक्रमेणानुकेशं भ्रामयति ओं यतक्षुरेणमज्जयतः सुपेशसावप्त्वात्रपतिकेशा-

च्छिन्धिशिरोमास्यायुःप्रमोषीः इति मंत्रेण ततस्ताभिरेवाद्भिःसमस्तंशिरःप्रक्षाल्य ओं अक्षण्वन् परिवप इतिनापिताय क्षुरं प्रयच्छति अथ नापितः शिखांधृत्वा समस्त शिरोवपवन् यथाकुलं वा कुर्यात् तांश्च केशान्नुतनवस्त्रेण गृहीत्वा माताद्धिभक्तदुग्ध समन्तिगोमयपिंडोपरि निदध्यात् इत्याचारः पूर्ववत्पूर्णाहुतिः ओं मूर्द्धानन्दिवोऽअर तिंपृथिव्यावैश्वानरमृतऽआजातमग्निं कवि ँ सम्राजमतिथिञ्जनानामासन्नापात्रंजन- यंतदेवाः स्वाहा इति मंत्रेण पूर्णाहुतिः। तत उपविश्य स्रुवेण भस्मानीयदक्षिणानामिका- ग्रगृहीतभस्मना त्र्यायुषं कुर्यात् ओं त्र्यायुषंयमदग्नेरितिललाटे ओं कश्यपस्यत्र्यायुष- मितिग्रीवायां ओं यद्देवेषु त्र्यायुषमिति दक्षिणबाहुमूले ओं तन्नोऽअस्तुत्र्यायुषमिति- हृदि अनेनैवक्रमेण कुमारललाटादावपि तत्र तत्ते अस्तु इतिविशेषः ततोदूर्वाक्षतादि ग्रहणं ततस्तान्केशान्सगोमयपिण्डान्गोष्ठेसरित्तीरे वा अन्यस्मिन्नुदकान्तरे वा

निदध्यात् ततः आचारान्दोज्यादि दातव्यम इति चूडाकरणम् ॥ ८ ॥

श्रीगणेशाय नमः ॥ अथोपनयनम् ॥ ॥ तत्र शुद्धसमये रविगुरुचंद्रतारादिशुद्धौ जन्मतोगर्भाष्टमेऽब्देवानुकूल्ये षोडशसंवत्सराभ्यंतरे ब्रह्मवर्चसकामस्य पञ्चमेप्युदगयनआपूर्यमाणपक्षेनध्याषष्ठीरिक्ताद्यतिरिक्ततिथौ रविगुरुशुक्रान्यतम वारेमध्यान्हादर्वाक्कुमारपित्राभ्युदायिके कृते तदभावे आचार्येणैव कृते अस्यकुमारस्योपनयनकर्तृकाधिकारसिध्यर्थमिदंकृच्छ्रत्रयंप्रायश्चित्तंगोनिष्क्रयद्रव्यंयथानामगोत्रायब्राह्मणाय दातुमहमुत्सृजे १ इति अस्यकुमारस्यगायत्र्युपदेशाधिकारसिध्यर्थं द्वादशोत्तरसहस्रगायत्रीजपमहं० २ अस्यकुमारस्योपनयनपूर्वाङ्गभूतंवपनंक० ३ अस्य कुमारस्योपनयनपूर्वाङ्गभूतं ब्राह्मणत्रयं भोजयिष्ये ४ अस्मिन्नुपनयनकर्मणि पंचभूः संस्कारपूर्वकमग्निस्थापनंक० ५ अस्यकुमारस्यब्राह्मण्याभिव्यक्तिद्विजत्वसिध्य

थं वेदाध्ययनाधिकारार्थं चोपनयनमहं करिष्ये ब्राह्मणान्माणवकंच भोजयित्वासशिख
कृतक्षौर स्नानानंतरं यथाशक्त्यलंकृतंकृत्वा बहिःशालायां तुष केश शर्करादि
शून्य परिष्कृतभूमौ आचार्योग्निस्थापनंकुर्यात् ॥ तत्रहस्तमात्रपरिमितचतुरस्र
भूमिं कुशकरणकसमूहनानंतरं गोमयोदकेनोपलिप्य स्रुवमूलेनप्रागग्रप्रादेश
मात्रमुत्तरोत्तरक्रमेणत्रिरुल्लिख्य उल्लेखनक्रमेणाऽनामिकांगुष्ठाभ्यांमृदुद्धृत्यजलेना-
भ्युक्ष्य नवीनकांस्यपात्रेणाग्निमानीय स्वाभिमुखंनिदध्यात् ततः कुमारमाचार्यः
शिष्यद्वाराग्नेः पश्चाद्दक्षिणपार्श्वेऽवस्थापयति ततः कुमारबद्धांजलिं संबोधयेति ओं
ब्रह्मचर्यमागामितिब्रूहि इतिप्रैषानंतरं ओं ब्रह्मचर्यमागमीति कुमारआह ततः ओं
ब्रह्मचार्यसानीति ब्रूहीत्याचार्येणोक्ते ओं ब्रह्मचार्यसानीति कुमारआह अथ माणव-
कमाचार्योवासः परिधापयति तत्र आचार्यपठनीयोमंत्रः ओं येनेन्द्रायबृहस्पतिर्वासः

पर्यंदधादमृत ॥ तेन त्वापरिधाम्यायुषेदीर्घायुत्वायबलाय वर्चसे । ततो माणवकस्य द्विराचमनम्, अथ माणवकस्य वेष्टनत्रयेण तत्प्रवरग्रंथियुतां मेखलामाचार्यो बध्नाति तत्र माणवकपठनीयो मंत्रः इयंदुरुक्तंपरिबाधमानावर्णंपवित्रंपुनतीमऽआगात् । प्राणापानाभ्यां बलमादधानास्वसा देवी सुभगामेखलेयं ॥ ओं युवासुवासाः परिवीतऽआगात् स उश्रेयान् भवति जायमानः । तंधीरासः कवयऽउन्नयन्तिस्वाध्यो मनसादेवयन्त इति वा । ततः आचाराद्यज्ञोपवीतसहितमाडाष्टतयंब्राह्मणेभ्यो दत्वा ॐतत्सदद्यामुकगोत्रः स्वकीयोपनयनकर्मविषयकसत्संस्कारप्राप्त्यर्थमिदं भांडाष्टतयंसयज्ञोपवीतं सदक्षिणं यथानामेति ॥ ततो यज्ञोपवीतं परिदधाति माणवकः । ओं यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ॥ आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः इतिमंत्रेण, तत ऐणेयमाजिनं तूष्णीं परिधत्ते, ततो माण-

बकेकेशपरिमि ।ा शदंडमाचार्यःतूष्णीं तस्मै प्रयच्छति, तंच योमेदंडइति प्रजापति ऋषिर्दण्डोदेवता यजुर्दण्डग्रहणे विनियोगः। ओं योमेदंडः परापतद्वैहायसोधिभूम्यां तमहंपुनरादद आयुष ब्रह्मणे ब्रह्मवर्चसाय इतिमंत्रेण माणवको गृह्णाति तत आचार्यो वारिणास्वमंजलिं पूरयित्वा कुमारस्यांजलिं तेनैवांजलिजलेनपूरयति ओं आपोहि-ष्ठामयोभुवस्तानऽऊर्जेदधातन महेरणाय चक्षसे ओं योवःशिवतमोरसस्तस्यभाज-यतेह न उशतीरिवमातरः ओं तस्माऽअरंगमामवो यस्यक्षयायजिन्वथ आपोजनय थाचनः इति ऋग्भिः॥ ततः सूर्यमुदीक्षस्वेति आचार्यप्रैषानन्तरं ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येमशरदः शतंजीवेमशरदः शत ठं० शृणुयामशरदः शतं प्रब्रवामशरदः शतमदीनाः स्यामशरदः शतंभूयश्चशरदः शतात् इत्यनेनादित्यं-पश्यति। अथ कुमारस्यदक्षिणांसंसहृदयं दक्षिणहस्तेन स्पृशत्याचार्यः ओं मम व्रतेते

हृदयंदधामि, ममचित्तमनुचित्तं ते अस्तु, ममवाचमेकमनाजुषस्व, बृहस्पतिरत्वानि-
युनक्तुमह्यं इतिमंत्रेण तत कुमारस्यदक्षिणहस्तं गृहीत्वा ते पृच्छति, को नामासि,
"श्रीअमुकशर्माहं भो इतिकुमार आह, कस्यब्रह्मचार्यसीत्याचार्यः ॥ भवतइति कुमार
आह, पुनराचार्यो भाषते ओं इन्द्रस्यब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यः॥श्रीअमुक-
शर्मन्। अथमाणवकं बद्धांजलिं पूर्वादिदिक्षु प्रदक्षिणमुपस्थानं कारयति। अथाचार्यो-
माणवकं भूतेभ्यः परिददाति तत्र आचार्यस्य मंत्रपाठः, ओं प्रजापतयेत्वापरिददा-
मीतिप्राच्यां, ओं देवायत्वासवित्रेपरिददामि इतिदक्षिणस्यां ओं अद्भ्यस्त्वौषधीभ्यः
परिददामि इतीप्रतिच्यां ओं द्यावापृथिवीभ्यांत्वापरिददामि इतिउदीच्यां ओं विश्वे-
भ्यस्त्वादेवेभ्यःपरिददामि इत्यधः ओं सर्वेभ्यः स्त्वाभूतेभ्यः परिददाम्यरिष्ट्यै इत्यूर्ध्वम्
ततोऽग्निं प्रदक्षिणीकृत्य आचार्यदक्षिणादिशि उपविशति माणवकः, ततः पुष्पचंदन-

चक्केशपरिमि ं ा शदंडमाचार्यःतूष्णीं तस्मै प्रयच्छति, तंच योमेदंडइति प्रजापति ऋषिर्दण्डोदेवता यजुर्दण्डग्रहणे विनियोगः । ओं योमदंडः परापतद्विहायसोधिभूम्यां तमहंपुनरादद आयुष ब्रह्मणे ब्रह्मवर्चसाय इतिमंत्रेण माणवको गृह्णाति तत आचार्यो वारिणास्वमंजलिं पूरयित्वा कुमारस्यांजलिं तेनैवांजलिजलेनपूरयति ओं आपोहि-ष्ठामयोभुवस्तानऊर्जेदधातन महेरणाय चक्षसे ओं योवः शिवतमोरसस्तस्यभाज-यतेह न उशतीरिवमातरः ओं तस्माऽअरंगमामवो यस्यक्षयायजिन्वथ आपोजनय थाचनः इति ऋग्भिः ॥ ततः सूर्यमुदीक्षस्वेति आचार्यप्रैषानन्तरं ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येमशरदः शतंजीवेमशरदः शत ठं० शृणुयामशरदः शतं प्रब्रवामशरदः शतमदीनाः स्यामशरदः शतंभूयश्चशरदः शतात् इत्यनेनादित्यं-पश्यति । अथ कुमारस्यदक्षिणांसंसहृदयं दक्षिणहस्तेन स्पृशत्यार्यः ओं मम व्रतेते

हृदयं दधामि, ममचित्तमनुचित्तं ते अस्तु, ममवाचमेकमनाजुषस्व, बृहस्पतिस्त्वानि-
युनक्तुमह्यं इतिमंत्रेण तत कुमारस्यदक्षिणहस्तं गृहीत्वा ते पृच्छति, को नामासि,
श्रीअमुकशर्माहं भो इतिकुमार आह, कस्यब्रह्मचार्यसीत्याचार्यः ॥ भवतइति कुमार
आह, पुनराचार्यो भाषते ओं इन्द्रस्यब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यः॥श्रीअमुक-
शर्मन्। अथमाणवकं बद्धांजलिं पूर्वादिदिक्षु प्रदक्षिणमुपस्थानं कारयति। अथाचार्यो-
माणवकं भूतेभ्यः परिददाति तत्र आचार्यस्य मंत्रपाठः, ओं प्रजापतयेत्वापरिददा-
मीतिप्राच्यां, ओं देवायत्वासवित्रेपरिददामि इतिदक्षिणस्यां ओं अद्भ्यस्त्वौषधीभ्यः
परिददामि इतीप्रतिच्यां ओं द्यावापृथिवीभ्यांत्वापरिददामि इतिउदीच्यां ओं विश्वे-
भ्यस्त्वादेवेभ्यःपरिददामि इत्यधः ओं सर्वेभ्यः स्त्वाभूतेभ्यः परिददाम्यरिष्ट्यै इत्यूर्ध्वम्
ततोऽग्निं प्रदक्षिणीकृत्य आचार्यदक्षिणादिशि उपविशति माणवकः, ततः पुष्पचंदन-

तांबूलवासांस्यादाय ततः ओं अद्यकर्तव्योपनयनहोमकर्मणि कृताकृतावेक्षणरूप-ब्रह्मकर्मकर्तुममुकगोत्रममुकशर्म्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेन त्वामहंवृणे इतिब्रह्माणं वृणुयात्। ओं व्रतोस्मीतिप्रतिवचनम्। पुष्पचंदनतांबूलवस्त्राण्यादाय ॐ अद्यकर्तव्योपनयनकर्मणिहोतृत्वकर्मकर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्होतृत्वेन त्वामहंवृणे इतिहोतारं वृणुयात्। ओं स्वस्तीतिप्रतिवचनम् ओं यथाविहितंकर्मकुर्वित्याचार्येणोक्ते ओं करवाणीतिब्राह्मणोऽवदत्। ततोग्नेर्दक्षिणतः शुद्धमासनं दत्वा तदुपरिप्रागग्रान्कुशानास्तीर्य ब्रह्माणमग्निप्रदक्षिणंकारयित्वास्मिन्कर्मणित्वंमे ब्रह्माभवेत्यभिधाय भवानीति तेनोक्ते तदुपरि ब्रह्माणमुदङ्मुखमुपवेश्य। ततः प्रणीतापात्रं पुरतः कृत्वा वारिणापरिपूर्य कुशैराच्छाद्य ब्रह्मणोमुखमवलोकयाग्नेरुत्तरतः कुशोपरि निदध्यात्। ततः परिस्तरणं बर्हिषश्चतुर्थ-

भागमादायाग्नेयादीशानांतं ब्रह्मणोग्निपर्यन्तं नैऋत्याद्वायव्यान्तं अग्नितः प्रणी-
तापर्यन्तम् ॥ ततोग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयंपवित्रार्थं साग्रमनं-
तर्गर्भकुशपत्रद्वयं ॥ प्रोक्षणीपात्रं ॥ आज्यस्थाली ॥ चरुस्थाली ॥ संमार्जनकुशाः ॥
उपयमनकुशाः ॥ समिधस्तिस्रः ॥ स्रुवः ॥ आज्यं ॥ षट्पंचाशदुत्तराचार्यमुष्टिशत-
द्वयावच्छिन्नतण्डुलपूर्णपात्रं ॥ पवित्रच्छेदन कुशानांपूर्वादिशिक्रमेणासादनीयं, ततः
पवित्रच्छेदनकुशैः पवित्रे छित्वा सपवित्रकरणं । प्रणीतोदकेन प्रोक्षणीपात्रे निधाय
अनामिकांगुष्ठाभ्यां गृहीतपवित्राभ्यां तज्जलं किंचित् त्रिरुत्क्षिप्य प्रणीतोदकेन
प्रोक्षणींत्रिरभिषिच्य प्रोक्षणीजलेनासादितवस्तुसेचनं कृत्वाऽग्निप्रणीतयोर्मध्ये
प्राक्षेणीपात्रं निदध्यात् । आज्यस्थाल्यामाज्यनिर्वापः अधिश्रयणं ततः
कुशंप्रज्वाल्याज्योपरिदाक्षिणं भ्रामयित्वा वन्हौ तत्प्रक्षिप्य स्रुव त्रिःप्रतप्य संमार्जन

होमः॥ततः संस्रवप्राशनम् आचमनं च, ततो ब्रह्मणेदक्षिणादानम ओं अद्यएतस्मिन्नुपनयनहोमकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रंप्रजापतिदैवतं अमुकगोत्रायामुकशर्मणेब्राह्मणायब्रह्मणेदक्षिणातुभ्यमहं संप्रददे इति दक्षिणां दद्यात्, ओंस्वस्तीतिप्रतिवचनम्॥ततोब्रह्मग्रन्थिविमोकः तत ओंसुमित्रियानऽआपऽओषधयः संतुइतिपवित्राभ्यांजलमानीय तेनशिरःसंमृज्य ओं दुर्मित्रियास्तस्मैसंतुयोऽस्मान्द्वेष्टियंचवयंद्विष्मः इत्यैशान्यांप्रणीतान्युब्जीकरणं ॥ ततः परिस्तरणक्रमेणबर्हिरुत्थाप्य घृतेनाभिघार्य हस्तेनैव जुहुयात् । ओं देवागातुविदोगातुवित्वागातुमित ॥ मनसस्पतइमन्देवयज्ञठंस्वाहा व्वातेधाः स्वाहा इति बर्हिर्होमः ॥ तत आचार्यः कुमारस्यानुशासनं करोति । ओं ब्रह्मचार्यसीत्याचार्यः, ओं असानीतिब्रह्मचारी ओं आपोशान इत्याचार्यः ओं अशानीतिकुमार आह ॥ ओं कर्मकुर्वित्याचार्यः

ओं करवाणीतिमाणवकः ओं मादिवासुषुप्थाइत्याचार्यः नस्वपामीतिकमारः ओंवाचं यच्छ इत्याचार्यः ओं यच्छानीतिकुमारः ओं समिधमाधेहीत्याचार्यः ओं आदधानी तिमाणवकः ओं अपोशानेत्याचार्यः ओं अशानीतिकुमारः अथाग्नेरुत्तरतः प्रत्य ङ्मुखोपविष्टायाचार्यचरणोपसंग्रहणपूर्वकमुदन्नायाचार्यसमीक्षमाणावकाचार्यः स्वय मपिसमीक्षितायास्मैनिवारितशंखतूर्यादिशब्दइष्टांशकेसावित्रीमन्वाह॥तत्र प्रथमावृत्तौ ओं भूर्भुवः स्वः तत्सवितुर्वरेण्यंभर्गोदेवस्य धीमहि। धियोयोनः प्रचोदयात ॥ओं पुनर्वारद्वयं अत्रतु सहपाठोविशेषः। अथ माणवकः आचार्यं दक्षिणदिशि अग्निपार्श्वे मोपविष्टो घृताक्तशुष्कनिषिद्धेतरैधनं जुहुयात् ॥ तत ओं अग्ने सुश्रवः सुश्रवसंमा कुरु ओं यथात्वमग्नेसुश्रवः सुश्रवाऽअसि ओं एवमाठं० सुश्रव' सौश्रवसंकुरु ओं यथात्वमग्निदेवानांयज्ञस्यनिधिपाऽ आसि ओं एवमहं मनुष्याणां वेदस्य निधिपे

भूयासं ॥ ततः प्रदक्षिणमग्निं वारिणा पर्युक्ष्य उत्थायस्वप्रोदशामितांघृताक्तपलाश समिधामादाय ओं अग्नयेसमिधमाहार्षंबृहतेजातवेदसे ॥ यथात्वमग्नेसमिधासमि ध्यसऽएवमहमायुषामेधयावर्चसाप्रजयापशुभिर्ब्रह्मवर्चसेन समिंधेजीवपुत्रोममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वीतेजस्वी ब्रह्मवर्चस्यन्नादोभूयासठं. स्वाहा इतिमंत्रेण जुहुयात् एवंसमिदंतरद्वयंजुहुयात् ओं अग्नेसुश्रवःसुश्रवसंमाकुरु ॐ यथात्वमग्नेसुश्रवःसुश्रवाऽअसि ओं एवंमाठं. सुश्रवः सौश्रवसंकुरु ॐ यथात्वमग्ने देवानां यज्ञस्यनिधिपाअसि ॐ एवमहंमनुष्याणां वेदस्यनिधिपोभूयासं ततःप्रदक्षि णमग्निंपर्युक्ष्य तूष्णीं पाणिप्रतप्य मुखंप्रतिमत्रांतेऽवमृशाति ॐ तनूपाऽअग्नेसि तन्वमेपाहि ॐ आयुर्दाऽग्नेस्यायुर्मेदेहि ॐ वर्चोदास्यग्ने वर्चोमेदेहि ॐ अग्ने यन्मेतन्वाऊनं तन्मऽआपृण ओं मेधांमेदेवः सवितादधातु ओं मेधांदेवी

सरस्वती आदधातु ओं मेधामश्विनौदेवावाधत्तां पुष्करस्रजौ ततः सर्वंगात्रादिषु
दक्षिणपाणिनास्पर्शः अत्र प्रत्येक मंत्रः ओं अंगानिचमऽआप्यायता इतिसर्वगात्रालं
भनं ॐ वाङ्मऽआप्यायतामिति मुखालंभनं ओं प्राणश्चमऽआप्यायतामितिनासि
कयोः ॐचक्षुश्चमऽआप्यायतामितिचक्षुषो। ओं श्रोत्रंचमऽआप्यायतामिति श्रोत्रयोः
ओं यशोबलंचआप्यायतामिति मंत्रपाठमात्रं ॥ ततो दक्षिणकरानामिकाग्रगृहीतभस्म
ना ललाटेग्रीवायांदक्षिणबाहुमूले हृदि चत्र्यायुषंकुर्यात् तत्र यथासंख्येन मंत्र
चतुष्टयम् ओं त्र्यायुषंजमदग्ने इतिललाटे ओं कश्यपस्यत्र्यायुषं इतिग्रीवायां ओं
यद्देवषुत्र्यायुषम् इतिदक्षिणबाहुमूले ओं तन्नोऽअस्तुत्र्यायुषम् इतिहृदि ततोन्यस्त
पाणिभ्यांपृथ्वीस्पृशन्नभिवादनं कुर्यात् तत्र प्रकारः ओंअमुक गोत्रोऽमुकप्रवरोऽमुक
शर्माहं भोवैश्वानरत्वामभिवादये ततोऽनेनैवक्रमेण सर्वोध्य वरुणमभिवाद्याचार्यंतथै

वाभिवादयेत् ततः आयुष्मान्भवसौम्येत्याचार्योब्रूयात् ततो भिक्षापात्रमादाय प्रथमं मातुःसकाशात ओं भवतिभिक्षांमे देहि इतिप्रार्थ्य ...नरं तद्दत्तां वाद्... आचार्याय निवेदयेत् तथैव भिक्षांतरं याचेत ॥ तत आचार्येणानुज्ञेत्यनुज्ञेतिभिक्षां स्वीकुर्यात् ततः फलपुष्पचंदनघृतपूर्णस्रुवेण ब्रह्मचारिदक्षिणकरस्पृष्टेनाचार्यः पूर्णाहुतिं दद्यात् तत्र मंत्रः ओं मूर्द्धानंदिवोऽअरतिं पृथिव्यावैश्वानरमृतऽआजातमग्निम कविर्ठं० सम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः स्वाहा इदमग्नये० ॥ ततः सुवर्ण-भस्मानीय दक्षिणानामिकाग्रगृहीतभस्मना ओं ॥ त्र्यायुषंजमदग्नेः इतिललाटे ओं कश्यपस्यत्र्यायुषं इतिग्रीवायां ओं यद्देवषुत्र्यायुषम् इतिदक्षिणबाहुमूले ओं तन्नो ऽअस्तु त्र्यायुषंइतिहृदि इतित्र्यायुषं कुर्यात ॥ कुमारपक्षे तन्नो इत्यस्थाने तत्ते इति ॥१२॥ विशेषः ॥ अथ क्षारलवणमधुमांसादिनिवृत्तिः । उद्धृतजलस्नानं दंडकृष्णाजिनधारणं

वृक्षारोहणविषमभूमिलंघननग्नस्त्रीनिरीक्षणस्त्रीसंभोगव्यसनव्यावृत्ति रूपाब्रह्मचा-
रिणीनियमाः तद्दिने ब्रह्मचारीवाग्यतोहः शेषं स्थितं एव गमयेत् ततः सायंसन्ध्यां-
कृत्वा तस्मिन्नेवाग्नौ पूर्ववतपर्युक्षणपरिसमूहनंकृत्वा वाचं विसृजेत् परिसमूहनन्तु
शुष्कनिषिद्धेन्तरन्धनस्याग्नौ प्रक्षेपः ततः सन्ध्यामुपास्य प्रतिदिनं सायंप्रातरपि ब्रह्म
चारिणा कर्तव्या ॥ इति उपनयनप्रयोगः ॥ अथवेदारम्भः ॥ तत्रकृतंनित्यक्रिय आ-
चार्यः ( अस्यब्रह्मचारिणः ब्रह्मयज्ञाधिकार श्रौताधानसिद्धिद्वारा श्रीप० प्रीत्यर्थं
वेदारंभमहंकरिष्ये) कुशैर्हस्तमात्रपरिमितभूमिं परिसमुह्य तानकुशानैशान्यां परित्य-
ज्य गोमयोदकेनोपलिप्य स्रुवमूलेन उत्तरोत्तरतः प्रागग्रंप्रादेशमात्रं त्रिरुल्लिख्य उल्ले-
खनक्रमेणानामिकांगुष्ठाभ्यामृद्धृत्य जलेनाभ्युक्ष्य कांस्येनाग्निमानीयाभिमुखं समा-
धाय पुष्पंचदनताम्बूलवस्त्राण्यादाय ॐ अद्यकर्त्तव्यवेदारम्भहोमकर्मणि कृताकृता-

देक्षण रूपब्रह्मकर्मकर्तुममुकगोत्रममुकशर्माणंब्राह्मणमेभिः पुष्पचंदनताम्बूलवासोभि
र्ब्रह्मत्वेन त्वामहंवृणे । इतिब्रह्माणंवृणुयात् ॥ ॐ वृतोऽस्मीतिप्रतिवचनं ॥ ॐ यथा
विहितंकर्मकुर्वित्याचार्यः ॐ करवाणीतितेनोक्ते अग्नेर्दक्षिणतः शुद्धमासनं दत्वा
तदुपरिप्रागग्रान्कुशानास्तीर्य ब्रह्माणमग्निंप्रदक्षिणक्रमेणआनयित्वा अस्मिन् कर्मणि
त्वम्मे ब्रह्माभवेत्यभिधाय ॐ भवामीतितेनोक्ते ब्रह्माणमुदङ्मुखं तत्रोपवेश्य प्रणीता-
पात्रंपुरतःकृत्वा वारिणापरिपूर्यकुशैराच्छाद्य ब्रह्मणोमुखमवलोक्याग्नेरुत्तरतः कुशोपरि
निदध्यात् ततः परिस्तरणंबर्हिषश्चतुर्थभागमादायआग्नेयादीशानांतं ब्रह्मणोऽग्नि-
पर्यंतम् नैरृत्याद्वायव्यांतम् अग्नितः प्रणीतापर्यंतं ततोऽग्नेरुत्तरतः पश्चिमदिशि
पवित्रच्छेदनार्थं कुशत्रयं पवित्रकरणार्थंसाग्रमनंतर्गर्भंकुशपत्रद्वयम् प्रोक्षणीपात्रमाज्य-
स्थालीः संमार्जनकुशाः उपयमनकुशाः समिधस्तिस्रः स्रुवः आज्यं पूर्णपात्रं एतानि

पवित्रच्छेदनकुशानां पूर्वदिशिक्रमेणासादनीयानि । ततःपवित्रच्छेदनकुशैः पवित्रे-
च्छित्वा सपवित्रकरेण प्रणीतोदकं त्रिःप्रोक्षणीपात्रे निधाय द्वाभ्यामनामिकांगुष्ठाभ्या-
मुत्तराग्रेपवित्रे गृहीत्वा त्रिरुत्पवनं ततः प्रोक्षणीपात्रंवामहस्ते कृत्वा दक्षिणहस्ता-
नामिकांगुष्ठाभ्यां त्रिरुद्दिंगनं तत. प्रणीतोदकेनप्रोक्षणीपात्रमभ्युक्ष्य प्रोक्षणीजलेन
यथासादितवस्तून्यभिषिच्याऽग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात्॥ततः आज्य-
स्थाल्यामाज्यं निरुप्याधिश्रयणम् ततःकुशंप्रज्वाल्याज्यस्याग्नेश्चोपरिप्रदक्षिणंभ्राम-
यित्वा अग्नौ तत्प्रक्षेपः ततस्त्रिःस्रुवप्रतपनं संमार्जनकुशानामग्रैरंतरतोमूलैर्बाह्यतः
स्रुवसंमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्त्रिःप्रतप्य दक्षिणतोनिदध्यात ततः आज्यमग्ने-
प्रदक्षिणं भ्रामयित्वाऽवतार्याग्रे निदध्यात् ततः आज्यस्य प्रोक्षणीवदुत्पवनं अवेक्ष्य
सत्यपद्रव्ये तन्निरसनं ततः प्रोक्षण्युत्पवनं ततउत्थायोपयमनकुशानादाय प्रजापतिं

का.उ. प्रयो.

मनसाध्यात्वा तूष्णीमग्नौघृताक्ताः समिधस्तिस्रः क्षिपेत् । तत उपविश्य सपवित्र-
प्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निपर्युक्ष्य प्रणीतापात्र पवित्रेनिधाय ब्रह्मणान्वारब्धः।
पातितदक्षिण जानुः समिद्धतमेग्नौ जुहुयात् तत्र प्रथमाहुतिचतुष्टये स्रुवावास्थितहुत
॥१४॥ शेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः ओं प्रजापतयेस्वाहा इदंप्रजापतये० इतिमनसा ओं
इंद्रायस्वाहा इदंमिन्द्राय इत्याघारौ ओं अग्नये स्वाहा इदंमग्नये० ॐ सोमायस्वाहा
इदंसोमाय० इत्याज्यभागौ ततः प्राकृतोऽनन्वारब्धकर्तृकोहोमः ॐ अंतरिक्षाय
स्वाहा इदंमंतरिक्षाय० ॐ वायवेस्वाहा० ॐ इदंवायवे० ॐ० ब्रह्मणेस्वाहा इदंब्रह्मणे
ॐ छंदोभ्यः स्वाहा इदंछंदोभ्य० एताः सामान्याहुतयः ॥ ओं प्रजापतयेस्वाहा इदं
प्रजापतये० इति मनसा ओं देवेभ्यःस्वाहा इदंदेवेभ्य ओं ऋषिभ्यः स्वाहा इदंऋषि
भ्यः० ओं श्रद्धायैस्वाहा इदंश्रद्धायै० ओं मेधायैस्वाहा इदंमेधायै०ओं सदसस्पतये ॥१४॥

स्वाहा इदं सदसस्पतये० ओं अनुमतये स्वाहा इदं अनुमतये० ततोन्वारब्धकर्तृको-
होमः तत्तदाहुत्यनंतरं स्रुवावस्थितहुतशेषघृतस्यप्रोक्षणीपात्रे प्रक्षेपः ओं भूः स्वाहा
इदंमग्नये० ओं भुवः स्वाहा इदंवायवे० ओं स्वः स्वाहा इदंसूर्याय० एतामहाव्या-
हृतयः । ओं त्वन्नोऽअग्नेवरुणस्याविद्वान्देवस्यहेडोअवयासिसीष्ठाः यजिष्ठोवन्हितमः
शोशुचानोविश्वाद्वेषा ऽं. सिप्रमुमुग्ध्यस्मत् स्वाहा इदमग्नीवरुणाभ्यां ओं सत्वन्नो
अग्नेवमोभवेतिनिर्दिष्टो अस्याउपसोव्युष्टौ अवयक्ष्वनोवरुण ऽं. रराणोव्वीहिमृडीक
ऽं. सुहवोनऽएधि स्वाहा इदमग्नीवरुणाभ्यां० ओं अयाश्चाग्नेस्यनभिशस्तिपाश्च
सत्यमित्वमयाऽअसि अयानोयज्ञंवहास्ययानेधेहिभेषजः ऽं. स्वाहा इदमग्नये ओं
येतेशतं वरुणये सहस्रंयज्ञियाः पाशाविततामहांतः तेभिर्नोअद्यसवितोतविष्णुर्विश्वे-
मुंचंतुमरुतः स्वर्काः स्वाहा इदंवरुणाय पवित्रेविष्णवे विश्वेभ्योदेवेभ्योमरुद्भ्यः स्वर्के-

भ्यश्च० ओं उदुत्तमंवरुणपाशमस्मपवाधंमाविमध्यम ठं. श्रथाय। अथव्वयमादित्य-
व्रतेतवानागसो अदितयेस्याम स्वाहा इदंवरुणाय० इतिसर्वप्रायश्चित्तसंज्ञकः ॥ ॐ
प्रजापतयेस्वाहा इदं प्रजापतये० इतिमनसा इतिप्राजापत्यं ओं अग्नयेस्विष्टकृते
स्वाहा इदमग्नये स्विष्टकृते इतिस्विष्टकृद्धोमः ॥ ततः संस्रवप्राशनम् तत् आचम्य
ओं अद्यकृतेतद्दारंभहोमकर्मणिकृताकृतवेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थं इदंपूर्णपात्रं
प्रजापतिदैवतममुकगोत्रायामुकशर्मणेब्राह्मणाय दक्षिणां तुभ्यमहंसंप्रददे इति दक्षि-
णां दद्यात् ॥ स्वस्तीतिप्रतिवचनं। ततो ब्रह्मग्रंथिविमोकः ॥ ओं सुमित्रियान आप
ओषधयः संतु इति पवित्राभ्यांप्रणीताजलमानीय तेन शिरः संमृज्य ओं दुर्मित्रिया-
तस्मैसन्तुयोस्मान्द्वेष्टियंचवयंद्विष्मः इतिमंत्रेण ऐशान्यां प्रणीतान्युब्जी कुर्यात्
ततस्तरणक्रमेणबर्हिरानीयघृतेनाभिघार्य्य हस्तेनैव जुहुयात, ओं देवागातु विदोगा

तुंवित्वाग तुमितमनस्पतइमंदेवयज्ञ ठ स्वाहाव्वातेधाः स्वाहा इति चाहिर्होमः ॥ ततः
काश्मीरगमनमृततइष्टाशकेवेदारंभंगुरुःकारयेत्।तत्रक्रमः ओंभुर्भुवःस्वःतत्सवितुर्वरेण्यं
भर्गोदेवस्य धीमहि धियो योनःप्रचोदयात् ओं इतिप्रणवांतं पठित्वा पाञ्जलिनमस्का-
रंचकारयित्वा ओं समिधाग्निंदुवस्यतघृतैर्बोधयतातिथिम् अस्मिन्हव्याजुहोतनसु-
समिद्धायशोचिषेइतिकंडिकांतंयाफाक्किकांवापाठयेत् ततः सप्रणवंस्वस्तिवाचयित्वा
उत्थायफलपुष्पसमान्वितब्रह्मचारिदक्षिणकरस्पृष्टेनघृतपूर्णेनपूर्णाहुतिं दद्यात् ओं
मुर्द्धानंदिवोऽअरतिंपृथिव्यावैश्वानरमृतऽआजातमग्निं कविं ठ॰ संम्राजमतिथिं-
जनानामासन्नापात्रंजनयंत देवाः स्वाहा इतिपूर्णाहुतिः । ततउपविश्यस्रुवेणभस्मा-
नीयदक्षिणानामिकाग्रगृहीतभस्मना ओं त्र्यायुषंजमदग्नेरितिललाटे ओं कश्यप-
स्यत्र्यायुषमितिग्रीवायां ओं यद्देवेषुत्र्यायुषं इतिदक्षिणबाहुमूले ओं तन्नोअस्तुत्र्या-

युषामितिहृदि अनेनैव क्रमेण ब्रह्मचारिललाटादावपि तत्रतत्तइतिविशेषः इतिवेदारंभः॥
अथसमावर्तनं ॥ तत्र शुभेदिनेप्रह्वीभुय स्नास्यामीति कुमारआचार्यंभाषते तत्र
स्नाहीत्याचार्यः ततोब्रह्मचारिणि आचार्यसन्निहितदाक्षिणदिशिउपविष्टे कृतस्ना-
नादिराचार्यः ( अस्यब्रह्मचारिणः गृहस्थाद्याश्रमांतरप्राप्तिद्वारा श्रीपरमे॰ प्री.त्य-
र्थंसमाव र्तनाख्यकर्माहंकरिष्ये ) कुशैर्हस्तमात्रां भूमिपरिसमुह्यतानैशान्यांपरित्यज्य
गोमयोदकेनोपलिप्य स्रुवमूलेनोत्तरोत्तरक्रमेण त्रिरुल्लिख्य उल्लेखनक्रमेणोधृत्य
जलेनाभ्युक्ष्य कांस्येनाग्निमानीय प्रत्यङ्मुखं निदध्यात ॥ ततः पुष्पचंदनतांबूल-
वासांस्यादाय ओं अद्यामुकस्यकर्त्तव्यसमावर्तनहोमकर्मणिकृताकृतावेक्षणरूपब्रह्म-
कर्मकर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचन्दनतांबूलवासोभिर्ब्रह्मत्वेन
त्वामहंवृणे वृतोस्मीतिप्रतिवचनं । यथाविहितंकर्मकुर्वित्यभिधाय ओं करवाणीतिते

नोक्ते अग्नेर्दक्षिणतः शुद्धमासनं दत्वातदुपरि प्रागग्रान् कुशानास्तीर्य्याऽस्मिकर्मणि त्वंमेब्रह्माभवेत्यभिधाय ओं भवामीतितेनोक्ते ब्राह्मणमुदङ्मुखं तत्रोपवेश्य। ततः प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य कुशैराच्छाद्य ब्रह्मणोमुखमवलोक्या-ऽग्नेरुत्तरतः कुशोपरि निदध्यात ततः परिस्तरणं बर्हिषश्चतुर्थभागमादायाग्नेयादी-शानांतं ब्रह्मणोऽग्निपर्य्यन्तं नैर्ऋत्याद्वायव्यांतं अग्नितःप्रणीतापर्य्यन्तं ततोऽग्ने-रुत्तरतः पश्चिमदिशिपवित्रच्छेदनार्थंकुशत्रयम् पवित्रकरणार्थंसाग्रमनंतर्गर्भंकुशपत्र-द्वयं प्रोक्षणीपात्रं आज्यस्थाली संमार्ज्जनार्थकुशाः उपयमनकुशाः समिधस्तिस्रः स्रुवः आज्यं पूर्णपात्रमेतानिवस्तूनि पूर्वपूर्वदिशिक्रमेणासादनीयानि ततः पवित्र-च्छेदनकुशैः पवित्रे छित्वा सपवित्रकरेण प्रणीतोदकं त्रिःप्रोक्षणीपात्रे निधायानामिका-गुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुत्पूर्य प्रोक्षणीपात्रंवामकरेणादायाऽनामिकांगुष्ठगृहीतपवि-

त्राभ्यां तज्जलं किंचिन्निरुत्क्षिप्य प्रणीतोदकेनप्रोक्षणीमभ्युक्ष्य प्रोक्षणीजलेन यथा-
सादितवस्तून्यभिषिच्याग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रे निदध्यात् । तत आज्यस्था-
ल्यामाज्यनिर्वापः अधिश्रयणं ततस्तृणं प्रज्वाल्याज्यस्याग्नेश्चोपरिप्रदक्षिणं भ्रामयित्वा
वन्हौ तत प्रक्षिप्य स्रुवात्रिः प्रतप्य संमार्जनकुशानामग्रैरंतरतोमूलैर्बाह्यतः स्रुवंसंमृज्य
प्रणीतोदकेनाभ्युक्ष्य पुनः प्रतप्य स्वस्यदक्षिणतोनिदध्यात् तत आज्यमग्निप्रद-
क्षिणंभ्रामयित्वाऽवतार्य्यत्रिः प्रोक्षणीवदुत्पूयावेक्ष्य सत्यपद्रव्येतन्निरसनं कृत्वा पुनः
पूर्ववत्प्रोक्षण्युत्पवनम् ततउत्थायोपयमनकुशान्वामहस्तेकृत्वा प्रजापति मनसा
ध्यात्वा तूष्णीमग्नौघृताक्ताः समिधस्तिस्रः क्षिपेत ततउपविश्यसपवित्रप्रोक्षण्युदकेन
प्रदक्षिणक्रमेणाग्निपर्य्युक्ष्य प्रणीतापात्रे पवित्रंनिधाय पातितदक्षिणजानुः समिद्ध-
तमेऽग्नौ ब्रह्मणान्वारब्ध स्रुवेणाज्याहुतीर्जुहुयात तत्र प्रथमाहुतिचतुष्टये प्रत्याहुत्य-

नन्तरं स्रुवावस्थितहुतशेषघृतस्यप्रोक्षणीपात्रे प्रक्षेपः ओं प्रजापतयेस्वाहा इदं प्रजापतये॰ इतिमनसा ओं इन्द्रायस्वाहा इदंमिन्द्राय॰ इत्याघारौ ओं अग्नयेस्वाहा इदमग्नये॰ ओं सोमायस्वाहा इदंसोमाय॰ इत्याज्यभागौ ततोऽनन्वारब्धकर्तृक-होमः ओं अन्तरिक्षायस्वाहा इदंमतरिक्षाय॰ ओं वायवेस्वाहा इदंवायवे॰ ओं ब्रह्मणेस्वाहा इदंब्रह्मणे॰ ओं छन्दोभ्यःस्वाहा इदंछन्दोभ्य॰ ओं प्रजापतयेस्वाहा इदंप्रजापतये॰ इतिमनसा ओं देवेभ्यः स्वाहा इदंदेवेभ्यः॰ ओं ऋषिभ्यः स्वाहा इदंऋषिभ्यः ओं श्रद्धायैस्वाहा इदं श्रद्धायै॰ ओं मेधायैस्वाहा इदंमेधायै ओं सदसस्पतयेस्वाहा इदं सदसस्पतये॰ ओं अनुमतयेस्वाहा इदंअनुमतये। ततो ब्रह्मणान्वारब्धो जुहुयात् अत्राहुतिदशत येतत्तदाहुत्यनंतरं स्रुवावस्थिताज्यस्य प्रोक्षणीपात्रे प्रक्षेपः ओं भूः स्वाहा इदमग्नये॰ ओं भुवः स्वाहा इदंवायवे॰ ओं स्वः

स्वाहा इदंसूर्याय० एतामहाव्याहृतयः ओं त्वन्नोऽअग्नेवरुणस्य विद्वान् देवस्यहेडो अवयासिसीष्ठाः याजिष्टोवन्हितमः शोशुचानोविश्वाद्वेषा ठं० सिप्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्यां० ओं सत्वन्नोअग्नेवसोमवोतीनेदिष्टो अस्या उषसाव्युष्टौ अव यक्ष्वनोवरुण ठं० रराणोवीहिमृडीक ठं० सुहवोन एधिस्वाहा इदमग्नीवरुणाभ्या० ओं अयाश्चाग्नेस्यनभिशस्तिपाश्चसत्वमित्वमया ऽअसि अयानोयज्ञंवहास्यया- नोधेहिभेषज ठं० स्वाहा इदमग्नये० ओं येतेशतंवरुणयेमहस्त्रंयज्ञियाःपाशावितता- महांतः ताभिर्नोऽअद्यसवितोतविष्णुविश्वेमुंचंतुमरुतः स्वर्क्काःस्वाहा इदंवरुणायस- वित्रेविष्णवेविश्वेभ्यो देवेभ्योमरुद्भ्यः स्वर्क्केभ्यश्च० ओं उदुत्तमंवरुणपाशमस्मद- वाधमंविमध्यम ठं० श्रथाय अथाव्वयमादित्यव्रतेतवानागमो अदितयेस्याम स्वाहा इदंवरुणायादित्यायादितये० इतिसर्वप्रायश्चित्तम् ॥ ओं प्रजापतयेस्वाहा इदं

प्रजापतये० इतिमनसा इतिप्राजापत्यम्॥ ओं अग्नेस्विष्टकृतेस्वाहा इदंमग्नये स्विष्ट
कृत० इति स्विष्टकृते॥ततः संस्रवप्राशनम्॥तत आचम्य ओं अद्य कृतैतत्समावर्तनहो-
मकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदंपूर्णपात्रंप्रजापतिदैवतममुकगोत्राया
मुकशर्मणे ब्राह्मणाय ब्रह्मणेदक्षिणां तुभ्यमहं संप्रददे, इतिदक्षिणां दद्यात् ॥ॐ स्वस्ती-
तिप्रतिबचनम्, ततोब्रह्मग्रन्थिविमोकः, ततः पवित्राभ्यांप्रणीताजलेन ओं सुमित्रियान
आपऽओषधयः संतु इति मंत्रेण शिरःसमृज्य, ओं दुर्मित्रियास्तस्मै संतु योस्मान्द्वेष्टि-
यंचवयंद्विष्म इतिमंत्रेणैशान्यां प्रणीतान्युब्जीकरणम् ॥ तनस्तरणक्रमेण बर्हिरानीय
घृतेनाभिघार्य हस्तेनैवजुहुयात ओंदेवागातुविदोगातुंवित्वागातुमितमनसस्पत इमं-
देवयज्ञ ठं स्वाहा व्वातेधाः स्वाहा इति बर्हिर्होमः ततोब्रह्मणान्वारब्धकर्तृकंकर्म, ततोऽ-
ग्निपश्चिमोपविष्टोब्रह्मचारी परिसमूहनंकुर्यात,तत्रघृताक्तशुष्कनिषिद्धेतरेंधनेनपंचा-

हुतीहस्तेनैव जुहुयात्, ओं अग्ने सुश्रवः सुश्रवसं माकुरु, ओं यथात्वमग्ने सुश्रवः सुश्रवा ऽअसि, ओं एवं मा ॅं सुश्रवः सौश्रवसं कुरु, ओं यथात्वमग्ने देवानां यज्ञस्य निधिपाऽअसि, ॐ एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् । ततः प्रदक्षिणमग्निं वारिणा पर्युक्ष्य उत्थाय घृताक्तां प्रादेशमितसमिधमादाय जुहुयात् ।तत्र मंत्र ॐ अग्नये समिधमाहार्षं, ॐ बृहते जातवेदसे, यथात्वमग्ने समिधा समिध्यस एवमहमायुषा मेधया वर्चसा प्रजया-पशुभिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासॅं स्वाहा, ततः समिधं तरद्वयमनेनैव क्रमेण प्रत्येकं हुत्वा उपविश्य तेनैव क्रमेण पंचाहुतीर्घृतात् शुष्कानिषिद्धेतेंधनेन जुहुयात, ओं अग्ने सुश्रवः सुश्रवसं माकुरु, ओं यथात्वमग्ने देवानां यज्ञस्य निधिपऽसि, ओं एवमहमनुष्याणां वेदस्य निधिपो भूयासम्, ततः प्रदक्षिणमग्निं वारिणा पर्युक्ष्य तूष्णीं पाणी प्रतप्य मुखं

प्रतिमंत्रान्तेवमृशति, ओंतनूपाऽग्नेसितन्वम्मेपाहि, ओं आयुर्दाऽअग्नेस्यायुर्मेदेहि, ओं वर्चोदाऽअग्नेसिवर्चोमेदेहि, ओंअग्नेयन्मेतन्वाऊनंतन्मऽआपृण, ओंमेधांमेदेवीसरस्वति आदधातु, ओं मेधामश्विनौदेवावाधत्तांपुष्करस्रजौ ॥ तत्रसर्वगात्रादिषु दक्षिणपाणिना स्पर्शः, तत्रप्रत्येकं मंत्रः।ओं अंगानिचमऽआप्यायताम इतिसर्वगात्रालंभने ओं वाङ्मऽ आप्यायतामिति मुखालंभनं, ओं प्राणश्चम ऽआप्यायतामितिनासिकयोः, ओंचक्षुश्च मऽआप्यायतामितिचक्षुर्द्वयस्पर्शः, ओं श्रोत्रंचमऽआप्यायतामितिमंत्रपाठमात्रं ततोदक्षिणाग्निकाग्रगृहीतभस्मनाललाटेग्रीवायादक्षिणबाहुमूले हृदिच त्र्यायुषंकुर्यात् यथा सख्येनमंत्रचतुष्टयं; ओंत्र्यायुषं जमदग्नेरितिललाटे, ओंकश्यपस्यत्र्यायुषं इतिग्रीवायां, ॐ यद्देवेषु त्र्यायुषामिति दक्षिण बाहुमूले. ओं तन्नोऽअस्तुत्र्यायुषं इतिहृदि, ततो व्यस्तपाणिभ्यांपृथिवींस्पृशन् प्रथमंवैश्वानरंसंबोध्याभिवादयेत, तत्रामुकगोत्रोमुकप्रवरो

स्मुकशर्माहं भोवैश्वानरत्वामभिवादये इति प्रकारः॥ततस्तथैववरुणंसंबोध्याभिवादयेत्, तथैवाचार्यंचाभिवादयेत, ततःआयुष्मान्भवसौम्यइत्याचार्यो ब्रूयात, ततोग्नेरुत्तरतःप्रा-गग्रानकुशानास्तीर्य तदुपारिदक्षिणोत्तरक्रमेणासादितवारिपूर्णकलशाष्टतये कलशानां पुरतःप्रागग्रेषु कुशेषुस्थित्वा एकस्मादाम्रपल्लवेनोदकंगृहीत्वा, ओंमेप्स्वंतरग्नेयःप्रवि-ष्टागोह्यउपगोह्यो मयूखोमनोहास्खलोविरुजस्तनूदुषुरिन्द्रियहतान्विजहामियोरोचन-स्तामिहंगृह्णामिइति मंत्रेण॥ ततः ॐ तेनमामभिषिंचामिश्रियैयशसेब्रह्मणेब्रह्मवर्च-सायइत्यात्मानमभिषिंचति, ततो द्वितीयघटस्थमुदकंगृह्णाति ओंयेप्स्वंतरग्नय० इति मंत्रेणगृहीत्वाम्रपल्लवेनाभिषिंचति, ओं येनश्रियमकृणुतांयेनवमृशता ठं० सुरांयेना क्षावभ्यषिंचतांयद्वांतदश्विनायशः इतिमंत्रेण ततस्तेनैवक्रमेण पुनःॐयेप्स्वंतरग्नय० इत्यनेनतृतीयकलशस्थजलमादाय ओं आपोहिष्ठामयोभुवस्तानऽऊर्जेदधातन महे-

रणायचक्षसे इतिमंत्रेणाभिषिच्य, तेनैवक्रमेण ॐ येप्स्वंतरग्नयइतिमंत्रेण चतुर्थं कलशस्थजलमादाय ओं योवः शिवतमोरसस्तस्यभाजयतेहनः उशतीरिवमातरः इति मंत्रेणाभिषिच्य पुनः पंचमकलशस्थजलं ॐयेप्स्वंतरग्नयइतिमंत्रेणतथैवादाय ओं तस्माऽअरंगमामवोयस्यक्षयायजिन्वथ आपोजनयथाचन इतिमंत्रेणाभिषिच्य,ततो ऽवशिष्टकलशत्रितयजलंतथैव ओं येप्स्वंतरग्नयइतिमंत्रेणप्रत्येकंग्रहीत्वातूष्णींप्रत्ये- कमभिषिंचाति। ततो मेखलामोचनंशिरोभागेन, ओंउदुत्तमंवरुणपाशमस्मदवाधमंवि- मध्यम ठं. अथाय अथावयमादित्यव्रतेतवानागसोअदितयेस्याम इतिमंत्रेण दंडकृ- ष्णाजिनेतूष्णींभूमौनिधाय, अन्यद्वस्त्रंपरिधायोत्तरीयंचधृत्वाचम्य बद्धांजलिरादित्य- मुपतिष्ठेत्, ब्रह्माचारी ओं उद्यनभ्राजमृष्णुरिंद्रोमरुद्भिरस्थात् प्रातर्यावभिरस्थातः दशसनिरसिदशसनिमाकुर्वाविदन्मागमयोद्यनभ्राजमृष्णुरिंद्रोमरुद्भिरस्थाद्दिवायावभि-

रस्थाच्छतसनिरासिशतसानिमाकुर्वाविदन्मागमयोद्यत्, ओजमृष्णुरिंद्रोमरुद्भिरस्था त्सार्थयाद्वभारिस्थ‍त् सहस्रसनिरमिसहस्रानिमाकुर्वाविदन्नागमयइतिमंत्रेण, ततो दधितिलान्वाप्राश्याचम्य जटालोमनखादीन्छेदयित्वास्नात्वाचम्यप्रादेशमितोदुम्बर-काष्ठेनदन्तधावनम्, ओंअन्नाद्यायव्यूहध्वठं. सोमोराजायमागमत्, समेमुखंप्रमाक्ष्य-तेयशसाचभगेनच इतिमंत्रेण, ततोदंतकाष्ठंपरित्यज्याचम्य सुगंधिद्रव्येणोद्वर्तनानं-तरंस्नात्वा द्विराचम्य चंदन कुंकुमादिनानासिकाया मुखस्यालम्भने ओं प्राणापानौ-मेतर्प्पय, चक्षुर्मेतर्प्पय; श्रोत्रंमेतर्पय, इतिमंत्रेणानुलिंपति ॥ ततः पाणीपक्षाल्य दक्षि-णामुखःपातितवामजानुःकृतोपसव्योद्विगुणभुग्नकुशत्रयातिलजलान्यादाय ओंतत्-कुशत्रयोपरिपितृंस्तर्पयेत, ओंपितरःशुंधध्वमितिमंत्रेण, ततः सव्यंकृत्वाआचाम्या-नुलिप्यजपेत् ओंसुचक्षाऽअहमक्षीभ्यांभूयासठं- सुवर्चामुखेन, सुश्रुत्कर्णाभ्यांभूया

सम इति ततोऽहनवासः परिधानम्, ओं पीरधास्यैयैशोधास्यैदीर्घायुत्वायजरदष्टिर-
स्मिशतंचजीवामिशरदः पुरूचीरायस्पोषमाभिसंव्ययिष्ये, इतिमंत्रेण ततोयज्ञोप-
वीतपरिधानम् ओं यज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्सहजंपुरस्तात्। आयुष्यमग्र्यंप्रति
मुंचशुभ्रंयज्ञोपवीतं बलमस्तुतेजः ॥ इतिमंत्रेण द्वितीयग्रहणम्, यज्ञोपवीतामिति प्रजा-
पतिऋषिर्यजुरुपवीतदेवतायज्ञोपवीतपरिधाने विनियोगः, ॐ यज्ञोपवीतमसियज्ञ-
स्यत्वायज्ञोपवीतेनोपनह्यामि। आचमनं अथोत्तरीयं ओं यशसामाद्यावापृथिवीयश-
सेंद्रायबृहस्पतिः। यशोभगश्चमाविदद्यशोमा प्रतिपद्यताम् इतिमंत्रेण, ततः पुष्पमा-
लाग्रहणमंत्रः ओं याऽआहरजमदग्निः श्रद्धायैकामायेंद्रियाय, ताऽअहंप्रतिगृह्णामिय-
शसाचभगेनच इतिमंत्रेणपुष्पमालाग्रहणम् ॥ ततःपुष्पमालापरिधानम्, ओं यद्य-
शोप्सरसामिंद्रश्चकारविपुलंपृथु। तेनसंग्रथिताः सुमनसऽआबध्नामियशोमयि। तिमं-

त्रेणपुष्पमालापरिधानम्॥अथोष्णीषेणशिरोवेष्टनं,० ओं युवासुवासाःपरिवीतऽआगा-
त्सउश्रेयान्भवतिजायमानः ॥ तंधीरासः कवयऽउन्नयंतिस्वाध्योमनसादेवयंतः इति
मंत्रेण, ततः कुण्डलेपरिदधाति ओं अलङ्करणमसिभूयोलंकरणंभूयात् ततोअञ्जन-
म्, ओं वृत्रस्यासिकनीनकश्चक्षुर्दाऽआसि चक्षुर्म्मेदेहि । तत आदर्शेआत्मदर्शनम्, ओं
रोचिष्णुरसि इतिमन्त्रेण; ततश्छत्रग्रहणं ओं बृहस्पतेश्छदिरसिपाप्मनोमामंतर्धेहि;
तेजसोयशसोमामंतर्धेहि इतिमंत्रेण । ततः पद्भ्यामुपानहौप्रतिगृह्णाति, ओं प्रति-
ष्ठस्थोविश्वतोमापातम्, इतिमंत्रेण । ततोवैणवदंडधारणम् ओं विश्वाभ्योमानाष्ट्राभ्य-
स्परिपाहिसर्वतः इतिमंत्रेण, ततः स्नातकस्यऽनियमाः॥ गानवादित्रनृत्यत्यागः, नतत्र-
गमनं, क्षेमेसति नरात्रौ ग्रामांतरंगच्छेत्,नधावेत्,नकूपेऽवेक्षणं,नवृक्षारोहणं, नफलत्रो
टनं, अमार्गेणनगच्छेत्, नग्नोनस्नायात्, नसंधिशयनम्, नविषमभूमिलंघन

अश्लीलंनोपवदेत्,उदितास्तसमयेसूर्यंनोपपश्येत्, जलमध्येसूर्यं आकाशस्थं नपश्येत्
देवेवर्षति नगच्छेत्, उदके आत्मानं नपश्येत्, अजातलोम्नींप्रमत्तांपुरुषाकृतिं
षंढंचनगच्छेदित्यादि । ततआचार्यायवरगोदानदक्षिणांदद्यात् ततः ओं मुर्द्धानंदिवोऽ
अरतिंपृथिव्या वैश्वानरमृतऽआजातमग्निं कवि ठं॰ संम्राजमतिथिंजनानामासन्ना
पात्रं जनयंतदेवाः स्वाहा, इतिमंत्रेण फलपुष्पसमन्वितघृतपूर्णस्रुवेणमाणवकदक्षिण
करस्पृष्टेनउत्थायपूर्णाहुतिमाचार्य्यःकुर्या दिति ॥ ततउपविश्यस्रुवेणभस्मानीयदक्षि-
णानामिकाग्रगृहीतभस्मना ओं त्र्य.युषंजमदग्नेरितिललाटे ओं कश्यपस्यत्र्यायुषंमि
तिग्रीवायाम्, ओंयद्देवेषुत्र्यायुषमितिदक्षिणबाहुमूले, ओंतन्नोऽअस्तुत्र्यायुषमितिहृदि
इतित्र्यायुषं कुर्यात्, अनेनैवक्रमेणकुमारललाटादावपि तत्रतभोइत्यस्यास्थाने तत्ते
इतिविशेषः ॥ ततमूर्द्धाक्षतादिग्रहणम् ॥ ❋ ॥ ॥ ❋ ॥ ॥ ❋ ॥ ॥ ❋ ॥

इति श्रीमहामत्तकमहासामंताधिपति श्रीरामदत्तविरचिता,
वाजसनेयानामुपनयनवेदारम्भसमावर्तनकर्मपद्धतिः समाप्ता ।

रोली )। नारा )॥ अबीर )। बुक्का हरदी )। मालाफूल १८ धूप )। दीप १० पेड़ा –) बतासा –) पान ५० सोपाड़ी १०० चावल ऽ४ दाल चनेकीऽ१ यज्ञोपवीत जोड़ा २० होमपात्र ५ कांसेका कटोरा होमका, कुशा, गोबर, मृगचर्म, १ मूजकी डोरी ६ पलासका दंड १ पलासकी समिधाऽ१ कंडा )। पुर्णपात्र चावलभरा २ कोपीनवगैरहका पियरी गज ४ नारियर ४ चमेलीका तेल ) ॥ वरन ४ लोटा आचमनी ४ धोती ४ अंगोछा ४ आसन ४ दक्षिणा, थालीकांसेकी, सोनेकी सलाई, वस्त्रोपवस्त्र गायत्रीपूजामें, गुरुको वस्त्रोपवस्त्र, दक्षिणाभेट, घृत ऽ॥। गूलरका दतुवन, २ वस्त्रोपवस्त्र ब्रह्मचारीको २ दही ऽ– तिल ऽ–

चंदन ऽ–केसरकी पगरी १ मिरजई १ रुमाल १ दर्पन १ जोड़ा छाता, सेहरा छड़ी बांसकी १ पटिया १ खराऊँ २ दंडा १ फरुहा १ लोटिया ८ गिलास ८ केसरि ऽ१ पंचपल्लव, ब्राह्मणभोजन ३० पत्तल १० पुरवा २५ दिया १५ कसोरा १५ दियरी २५ बालुकी वेदी ऽ५ आमकी लकड़ी ऽ४ शुद्ध गंगाजल घड़ा १ ।

• इति सम्पूर्णम् •



❋ इति ❋

माध्यन्दिनशाखीयोपनयनप्रयोगविधिः